# आर्चज्योतिषम्

पंचसंवत्सरमयं युगाध्यक्षं प्रजापतिम् ।
दिनर्त्वयनमासांगं प्रणम्य शिरसा शुचिः ॥ १॥

प्रणम्य शिरसा कालमभिवद्य सरस्वतीम् ।
कालज्ञानं प्रवक्ष्यामि लगधस्य महात्मनः ॥ २॥

ज्योतिषामयनं पुण्यं प्रवक्ष्याम्यनुपूर्वशः ।
विप्राणां सम्मतं लोके यज्ञकालार्थ सिद्धये ॥ ३॥

निरेकं द्वादशाभ्यस्तं द्विगुणं गतसंज्ञिकम् ।
षष्ट्या षष्ट्या युतं द्वाभ्यां पर्वणां राशिरुच्यते ॥ ४॥

स्वराक्रमेते सोमार्कौ यदा साकं सवासवौ ।
स्यात्तदादियुगं माघस्तपः शुक्लोऽयनं ह्युदक् ॥ ५॥

प्रपद्यते श्रविष्ठादौ सूर्याचन्द्रमसावुदक् ।
सार्पार्धे दक्षिणार्कस्तु माघश्रावणयोः सदा ॥ ६॥

धर्मवृद्धिरपां प्रस्थः क्षपाह्रास उदग्गतौ ।
दक्षिणे तौ विपर्यासः षण्मुहूर्त्ययनेन तु ॥ ७॥

द्विगुणं सप्तमं चाहुरयनाद्यं त्रयोदश ।
चतुर्थं दशमं चैव द्विर्युग्मं बहुलेप्यृतौ ॥ ८॥

वसुस्त्वष्टा भवोऽजश्च मित्रः सर्पोऽश्विनौ जलम् ।
धाता कश्चायनाद्याः स्युरर्धपंचमभस्त्वृतुः ॥ ९॥

भांशाः स्युरष्टकाः कार्याः पक्षा द्वादशकोद्गताः ।
एकादशगुणश्चोनः शुक्लेऽर्धं चैन्दवा यदि ॥ १०॥

कार्या भांशाष्टकास्थाने कला एकान्नविंशतिः ।
उनस्थाने त्रिसप्ततिमुद्ववपेदूनसम्मिताः ॥ ११॥

त्र्यंशो भशेषो दिवसांशभागश्चतुर्दशस्याप्यपनीय भिन्नम् ।
भार्धेऽधिके चाधिगते परेंऽशेद्यावुक्तमेकं नवकैर्भवेद्यः ॥ १२॥

पक्षात्पंचदशाच्चोर्ध्वं तद्भुक्तमिति निर्दिशेत् ।
नवभिस्तूद्गतोंऽशः स्यादूनांशद्वयधिकेन तु ॥ १३॥

जौ द्रा गः खे श्वे ही रो षा श्चिन्मूषक्ण्यः सूमाधाणः ।
रे मृ घाः स्वापोजः कृष्यो ह ज्येष्ठा इत्यृक्षा लिंगैः ॥ १४॥

जावाद्यशैः समं विद्यात् पूर्वार्धे पर्व सूत्तरे ।
भादानं स्याच्चतुर्दश्यां काष्ठानां देविना कलाः ॥ १५॥

कला दश सविंशा स्याद् द्वे मुहुर्तस्य नाडिके ।
द्युस्त्रिंशंत् तत्कलानां तु षट्शती त्र्यधिका भवेत् ॥ १६॥

नाडिके द्वे मुहुर्तस्तु पंचाशत्पलमाढकम् ।
आढाकात्कुम्भाकोद्रोणः कुटपैर्वर्धते त्रिभिः ॥ १७॥

ससप्तकं भयुक् सोमः सूर्यो द्यूनि त्रयोदश ।
नवमानि च पंचाह्नः काष्ठाः पंचाक्षरा भवेत् ॥ १८॥

श्रविष्ठाभ्यो गणाभ्यस्तान् प्राग्विलग्नान् विनिर्दिशेत् ।
स्तर्यान् मासान् षडभ्यस्तान् विद्याच्चान्द्रमसानृतून ॥ १९॥

अतीतपर्वभागेभ्यः शोधयेद् द्विगुणां तिथिम् ।
तेषु मंडलभागेषु तिथिनिष्ठांगतो रविः ॥ २०॥

याः पर्वाभादानकलास्तासु सप्तगुणां तिथिम् ।
पक्षिपेत्तत् समूहस्तु विद्यादादानिकाः कलाः ॥ २१॥

यदुत्तरस्यायनतो गतं स्याच् छेषं तथा दक्षिणतोऽयनस्य ।
तदेकषष्ट्याद्विगुणं विभक्तं सद्वादशं स्याद् दिवसप्रमाणम् ॥ २२॥

यदर्धं दिनभागानां सदा पर्वणि पर्वणि ।
ऋतुशेषं तु तद् विद्यात् संख्याय सह पर्वणाम् ॥ २३॥

इत्युपायसमुद्देशो भूयोप्यह्नः प्रकल्पयेत् ।
ज्ञेयराशिं गताभ्यस्तं विभजेज्ज्ञानराशिना ॥ २४॥

अग्निः प्रजापतिः सोमो रुद्रोदितिबृहस्पती ।
सर्पाश्च पितरश्चैव भगश्चैवार्यमापि च ॥ २५॥

सविता त्वष्टाथ वायुश्चेन्द्राग्नी मित्र एव च ।
इन्द्रो निऋृतिरापो वै विश्वेदेवास्तथैव च ॥ २६॥

विष्णुर्वसवो वरुणोऽजेकपात् तथैव च ।
अहिर्बुध्न्यस्तथा पूषा अश्विनौ यम एव च ॥ २७॥

नक्षत्रदेवता एता एताभिर्यज्ञकर्मणि ।
यजमानस्य शास्त्रज्ञैर्नाम नक्षत्रजं स्मृतम् ॥ २८॥

इत्येवं मासवर्षाणां मुहुर्तोदयपर्वणाम् ।
दिनर्त्वयनमासांगं व्याख्यानं लगधोऽब्रवीत् ॥ २९॥

सोमसूर्यस्तृचरितं विद्वान् वेदविदश्नुते ।
सोमसूर्यस्तृचरितं लोकं लोके च सम्मतिम् ॥ ३०॥

विषुवं तद्गुणं द्वाभ्यां रूपहीनं तु षड्गुणम् ।
यल्लब्धं तानि पर्वाणि तथार्धं सा तिथिर्भवेत् ॥ ३१॥

माघशुक्लप्रपन्नस्य पौषकृष्णसमापिनः ।
युगस्य पंचवर्षस्य कालज्ञानं प्रचक्षते ॥ ३२॥

तृतीयां नवमीं चैव पौर्णमासीमथासिते ।
षष्ठि च विषुवान् प्रोक्तो द्वादशीं च समं भवेत् ॥ ३३॥

चतुर्दशीमुपवसथस्तथा भवेद्यथोदितो दिवसमुपैति चन्द्रमाः ।
मघशुक्लाह्निको भुङ्क्ते श्रविष्ठायां च वार्षिकीम् ॥ ३४॥

यथा शिखा मयूराणां नागानां मणयो यथा ।
तद्वद्वेदांगशास्त्राणां ज्यौतिषं मूर्धानि स्थितम् ॥ ३५॥

वेद हि यज्ञार्थमभिप्रवृत्ताः कालानुपूर्व्या विहिताश्च यज्ञाः ।
तस्मादिदं कालविधानशास्त्रं यो ज्योतिषं वेद स वेद यज्ञान् ॥ ३६॥

॥ इति आर्चज्योतिषं समाप्तम् ॥